# नारदीयाशिक्षा

## प्रथमः प्रपाठकः

### कण्डिका १

अथातः स्वरशास्त्राणां सर्वेषां वेदनिश्चयम्
उच्चनीचविशेषाद्धि स्वरान्यत्वं प्रवर्त्तते १

आर्चिकं गाथिकं चैव सामिकं च स्वरान्तरम्
कृतान्ते स्वरशास्त्राणां प्रयोक्तव्यं विशेषतः २

एकान्तरस्वरो ह्यृक्षु गाथासु द्व्यन्तरःस्वरः
सामसु त्र्यन्तरं विद्यादेतावत्स्वरतोऽन्तरम् ३

ऋक्सामयजुरङ्गानि ये यज्ञेषु प्रयुञ्जते
अविज्ञानाद्धि शास्त्राणां तेषां भवति विस्वरः ४

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ५

प्रहीणः स्वरवर्णाभ्यां यो वै मन्त्रः प्रयुज्यते
यज्ञेषु यजमानस्य रुषत्यायुः प्रजां पशून् ६

उरः कण्ठः शिरश्चैव स्थानानि त्रीणि वाङ्मये
सवनान्याहुरेतानि साम वाप्यर्थतोन्तरम् ७

उरः सप्तविचारं स्यात्तथा कण्ठस्तथा शिरः
न च सप्तोरसि व्यक्तास्तथा प्रावचनो विधिः ८

कठकालापप्रवृत्तेषु तैत्तिरीयाह्वरकेषु च
ऋग्वेदे सामवेदे च वक्तव्यः प्रथमः स्वरः ९

ऋग्वेदस्तु द्वितीयेन तृतीयेन च वर्तते
उच्चमध्यमसंघातः स्वरो भवति पार्थिवः १०

तृतीयप्रथमक्रुष्टान् कुर्वन्त्याह्वरकाः स्वरान्
द्वितीयाद्यांस्तु मन्द्रान्तांस्तैत्तिरीयाश्चतुरः स्वरान् ११

प्रथमश्च द्वितीयश्च तृतीयश्च चतुर्थकः
मन्द्रः क्रुष्टो ह्यतिस्वार एतान्कुर्वन्ति सामगाः १२

द्वितीयप्रथमावेतौ तांडिभाल्लविनां स्वरौ
तथाशातपथावेतौ स्वरौ वाजसनेयिनाम् १३

एतेविशेषतः प्रोक्ताः स्वरावै सार्ववैदिकाः
इत्येतच्चारितं सर्वं स्वराणां सार्ववैदिकम् १४

इति प्रथमा कण्डिका

कण्डिका २

सामवेदे तु वक्ष्यामि स्वराणां चरितं यथा
अल्पग्रन्थं प्रभूतार्थं श्रव्यं वेदाङ्गमुत्तमम् १

तानरागस्वरग्राममूर्छनानां तु लक्षणम्
पवित्रं पावनं पुण्यं नारदेन प्रकीर्तितम् २

शिक्षामाहुर्द्विजातीनामृग्यजुःसामलक्षणम्
नारदीयमशेषेण निरुक्तमनुपूर्वशः ३

सप्तस्वरास्त्रयो ग्रामामूर्छनास्त्वेकविंशतिः
ताना एकोनपञ्चाशदित्येतत्स्वरमण्डलम् ४

षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा
पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः ५

षड्जमध्यमगान्धारास्त्रयो ग्रामाः प्रकीर्तिताः
भूर्लोकाज्ञायते षड्जो भुवर्लोकाच्च मध्यमः ६

स्वर्गान्नान्यत्र गान्धारो नारदस्य मतं यथा
स्वररागविशेषेण ग्रामरागा इति स्मृताः ७

विंशतिर्मध्यमग्रामे षड्जग्रामे चतुर्दश
तानान् पञ्चदशेच्छन्ति गान्धारग्राममाश्रितान् ८

नन्दी विशाला सुमुखी चित्रा चित्रवती मुखा
बला या चाथ विज्ञेया देवानां सप्त मूर्छनाः ९

आप्यायनी विश्वभृता चन्द्रा हेमा कपर्दिनी
मैत्री वार्हती चैव पितृणां सप्त मूर्छनाः १०

षड्जेतूत्तरमन्द्रा स्यादृषभे चाभिरुद्गता
अश्वक्रान्ता तु गान्धारे तृतीया मूर्छना स्मृता ११

मध्यमे खलु सौवीरा हृष्यका पञ्चमे स्वरे
धैवते चापिविज्ञेया मूर्छना तूत्तरायता १२

निषादाद्रजनी विद्यादृषीणां सप्तमूर्छनाः
उपजीवन्ति गन्धर्वादेवानां सप्तमूर्छनाः १३

पितृणां मूर्छनाः सप्त तथा यक्षा न संशयः
ऋषीणां मूर्छनाः सप्त यास्त्विमा लौकिकाः स्मृताः १४

षड्जः प्रीणाति वै देवानृषीन् प्रीणाति चर्षभः
पितृन्प्रीणातिगान्धारो गन्धर्वान्मध्यमः स्वरः १५

देवान पितृनृषींश्चैव स्वरः प्रीणाति पञ्चमः

यक्षान् निषादः प्रीणाति भूतग्रामं च धैवत इति १६

इति प्रथमे द्वितीयाकण्डिका

कण्डिका ३

गानस्य तु दशविधा गुणवृत्तिस्तद्यथा
रक्तं पूर्णमलङ्कृतं प्रसन्नं व्यक्तंविक्रुष्टं श्लक्ष्णं समं सुकुमारं मधुरमिति गुणाः१

तत्र रक्तं नाम वेणुवीणास्वराणामेकीभावे रक्तमित्युच्यते २

पूर्णं नाम स्वरश्रुतिपूरणाच्छन्दः पादाक्षर संयोगात्पूर्णमित्युच्यते ३

अलङ्कृतं नामोरसि शिरसि कण्ठयुक्तमित्यलङ्कृतम् ४

प्रसन्नं नामापगतगद्गदनिर्विशङ्कं प्रसन्नमित्युच्यते ५

व्यक्तं नाम पदपदार्थप्रकृतिविकारागमलोपकृत्तद्धितसमासधातुनिपातोपसर्गस्वरलिङ्गवृत्तिवार्त्तिकविभक्त्यर्थवचनानां सम्यगुपपादने व्यक्तमित्युच्यते ६

विक्रुष्टं नामोच्चैरुच्चारितं व्यक्तपदाक्षरमिति विक्रुष्टम् ७

श्लक्ष्णं नामाद्रुतमविलम्बितमुच्चनीचप्लुतसमाहारहेलतारवोपनयानादिभिरुपपादनादिभिः श्लक्ष्णमित्युच्यते ८

समं नामावापनिर्वापप्रदेशे प्रत्यन्तरस्थानानां समासः सममित्युच्यते ९

असुकुमारं नाम मृदुपदवर्णस्वरकुहरणयुक्तं सुकुमारमित्युच्यते १०

मधुरं नाम स्वभावोपनीतललितपदाक्षर गुणसमृद्धं मधुरमित्युच्यते ११

शङ्कितं भीतमुद्धृष्टमव्यक्तमनुनासिकम्
काकस्वरं शिरसिगतं तथास्थान विवर्जितम् १२

विस्वरं विरसं चैव विश्लिष्टं विषमाहतम्
व्याकुलं तालुहीनं च गीतिदोषाश्चतुर्दश १३

आचार्याः सममिच्छन्ति पदच्छेदन्तु पण्डिताः
स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः १४

इति तृतीया कण्डिका

कण्डिका ४

पद्मपत्रप्रभःषड्जऋृषभः शुकपिंजरः
कनकाभस्तु गान्धारो मध्यमः कुन्दसप्रभः १

पञ्चमस्तु भवेत्कृष्णः पीतकं धैवतं विदुः
निषादः सर्ववर्णः स्यादित्येताः स्वरवर्णताः २

पञ्चमोमध्यमः षड्जइत्येते ब्राह्मणाः स्मृताः
ऋृषभो धैवतश्चापीत्येतौ क्षत्रियावुभौ ३

गान्धारश्च निषादश्च वैश्यावर्धेन वै स्मृतौ
शूद्रत्वं विद्धि चार्धेन पतितत्वान्न संशयः ४

ऋृषभोत्थितः षड्जहतो धैवतसहितश्च पञ्चमो यत्र
निपतति मध्यमरागे तन्निषादं षाडवं विद्यात् ५

यदि पञ्चमो विरमते गान्धारश्चान्तरस्वरो भवति
ऋृषभो निषादसहितस्तं पञ्चममीदृशं विद्यात् ६

गान्धारस्याधिपत्येन निषादस्य गतागतैः
धैवतस्य च दौर्वल्यान् मध्यमग्राममुच्यते ७

ईषत्स्पृष्टो निषादस्तु गान्धारश्चाधिको भवेत्
धैवतः कंपितो यत्र षड्ज ग्रामं तु निर्द्दिशेत् ८

अन्तरस्वरसंयुक्ता काकलिर्पत्र दृश्यते
तं तु साधारितं विद्यात्पञ्चमस्थं तु कैशिकम् ९

कैशिकं भावयित्वा तु स्वरैः सर्वैः समन्ततः
यस्मात्तु मध्यमे न्यासस्तस्मात्कैशिक मध्यमः १०

काकलिर्दृश्यते यत्र प्राधान्यं पञ्चमस्य तु
कश्यपः कैशिकं प्राह मध्यमग्रामसम्भवम् ११

गेति गेयं विदुः प्राज्ञा धेतिकारुप्रवादनम्
वेति वाद्यस्य विज्ञेयं गान्धर्वस्य विरोचनमिति १२

इति चतुर्थी कण्डिका

कण्डिका ५

यः सामगानां प्रथमः स वेणोर्मध्यमः स्वरः
यो द्वितीयः स गान्धारस्तृतीयस्त्वृषभः स्मृतः १

चतुर्थः षड्ज इत्याहु पञ्चमो धैवतो भवेत्
षष्ठो निषादो विज्ञेयः सप्तमः पञ्चमः स्मृतः २

षड्जं वदति मयूरो गावो रम्भन्ति चर्षभम्
अजाविके तु गान्धरं क्रौञ्चो वदति मध्यमम् ३

पूष्पसाधारणे माले कोकिलो वक्ति पञ्चमम्
अश्वस्तु धैवतं वक्ति निषादं वक्ति कुञ्जरः ४

कण्ठादुत्तिष्ठते षड्जः शिरसस्त्वृषभः स्मृतः
गान्धारस्त्वानुनासिक्य उरसो मध्यमः स्वरः ५

उरसः शिरसः कण्ठादुच्छ्रितः पञ्चमः स्वरः

ललाटाद्धैवतं विद्यान्निषादं सर्वसन्धिजम्  ६

नासां कण्ठमुरस्तालुजिह्वादन्तांश्च संश्रितः
षड्भिः सञ्जायते यस्मात्तस्मात् षड्ज इति स्मृतः  ७

वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः
नर्दत्यृषभवद्यस्मात्तस्मादृषभ उच्यते  ८

वायुः समुत्थितो नाभेः कण्ठशीर्ष समाहतः
नासागन्धावहः पुण्यो गान्धारस्तेनहेतुना  ९

वायुः समुच्छ्रितो नाभेरुरोहृदि समाहतः
नाभिं प्राप्तो महानादो मध्यमत्वं समश्नुते  १०

वायुः समुत्थितोनाभेरूरोहृत्कण्ठशिरोहतः
पञ्चस्थानोत्थितस्यास्य पञ्चमत्वं विधीयते  ११

धैवतं च निषादं च वर्ज्जयित्वा स्वरद्वयम्
शेषान्पञ्चस्वरांस्त्वन्यान्पञ्चस्थानोच्छ्रितान्विदुः  १२

अग्निगीतः स्वरः षड्ज ऋषभो ब्रह्मणोच्यते
सोमेन गीती गान्धारो विष्णुना मध्यमः स्वरः १३

पञ्चमस्तु स्वरो गीतो नारदेन महात्मना
धैवतश्च निषादश्च गीतौ तुम्बुरुणा स्वरौ  १४

आद्यस्य दैवतं ब्रह्मा षड्जस्याप्युच्यते बुधैः
तीक्ष्णदीप्तिप्रकाशत्वाद् ऋषभस्य हुताशनः  १५

गावः प्रगीते तुष्यन्ति गान्धारस्तेन हेतुना
श्रुत्वा चैवोपतिष्ठन्ति सौरभेया न संशयः  १६

सोमस्तुपञ्चमस्यापि दैवतं ब्रह्मराट्स्मृतम्
निर्ह्रासो यस्य वृद्धिश्च ग्राममासाद्य सोमवत् १७

अति सन्धीयते यस्मादेतान् पूर्वोत्थितान् स्वरान्
तस्मादस्य स्वरस्यापि धैवतत्वं विधीयते १८

निषीदन्ति स्वरा यस्मान्निषादस्तेन हेतुना
सर्वांश्चाभिभवत्येष यदादित्योऽस्य दैवतमिति १९

इति पञ्चमी कण्डिका

कण्डिका ६

दारवी गात्रवीणा च द्वे वीणे गानजातिषु
सामिकी गात्रवीणा तु तस्याः शृणुत लक्षणम् १

गात्रवीणा तु सा प्रोक्ता यस्यां गायन्ति सामगाः
स्वरव्यञ्जनसंयुक्ता अङ्गुल्यङ्गुष्ठरञ्जिता २

हस्तौ सुसंयुतैधायौ जानुभ्यामुपरिस्थितौ
गुरोरनुकृतिं कुर्याद्यथाज्ञानमतिर्भवेत् ३

प्रणवं प्राक् प्रयुञ्जीतव्याहृत्तीस्तदनन्तरम्
सावित्रीं चानुवचनं ततो वृत्तान्तमारभेत् ४

प्रसार्यं चाङ्गुलीः सर्वा रोपयेत्स्वरमण्डलम्
न चाङ्गुलिभिरङ्गुष्ठमङ्गुष्ठेनाङ्गुलीः स्पृशेत् ५

विरला नाङ्गुलीः कुर्यान्मूले चैनां न संस्पृशेत्
अङ्गुष्ठाग्रेण ता नित्यं मध्यमे पर्वणि स्पृशेत् ६

मात्रद्विमात्रवृद्धानां विभागार्थं विभागवित्
अङ्गुलीभिर्द्विमात्रं तु पार्णैः सव्यस्य दर्शयेत् ७

त्रिरेखा यत्र दृश्येत सन्धिं तत्र विनिर्दिशेत्
स पर्व इति विज्ञेयः शेषमन्तरमन्तरम् ८

यवान्तरं तु सामस्त्वृच्चु कुर्यात्तिलान्तरम्
स्वरान्मध्यमपर्वसु सुनिविष्टान्निवेशयेत् ९

न चात्र कम्पयेत्किञ्चिदङ्गस्यावयवं बुधः
अधस्तनं मृदुन्यस्य हस्तमास्ते यथाक्रमम् १०

अभ्रमध्ये यथा विद्युद्दृश्यते मणिसूत्रवत्
एषच्छेदो विवृत्तीनां यथा बालेषु कर्तरि ११

कूर्मोङ्गानीव संहृत्य चेष्टां दृष्टिं दिशन् मनः
स्वस्थः प्रशान्तो निर्भितो वर्णानुच्चारयेद्बुधः १२

नासिकायास्तु पूर्वेण हस्तं गोकर्णवद्धरेत्
निवेश्यदृष्टिं हस्ताग्रे शास्त्रार्थमनुचिन्तयेत् १३

सममुच्चारयेद्वाक्यं हस्तेन च मुखेन च
यथैवोच्चारयेद्वर्णांस्तथैवैनान् समापयेत् १४

नाभ्याइत्यात्र निर्हन्यात्र प्रयोगन्न कम्पयेत्
समं सामानि गायेत व्योम्नि श्येनगतिर्यथा १५

यथाप्सु चरतां मार्गो मीनानां नोपलभ्यते
आकाशे वा विहङ्गानां तद्वत्स्वरगता श्रुतिः १६

यथादधनि सर्पिः स्यात्काष्ठस्थोवा यथानलः
प्रयत्नेनोपलम्येत तद्वत्स्वरगता श्रुतिः १७

स्वरात्स्वरं सङ्क्रमस्तु स्वरसन्धिमनुल्बणम्

अविच्छिन्नं समंकुर्यात्सूक्ष्मं छायातपोपमम्  १८

अनागतमतिक्रान्तं विच्छिन्नं विषमाहतम्
तन्वन्तमस्थितान्तं च वर्ज्जयेत्कर्षणं बुधः  १९

स्वरस्थानाच्च्युतोयस्तुस्वं स्थानमतिवर्त्तते
विस्वरं सामगाः कुर्युविरक्तमतिवीणिनः २०

अभ्यासार्थे द्रुतां बृत्तिं प्रयोगार्थे तु मध्यमाम्
शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम् २१

गृहीतग्रन्थ एवं तु ग्रन्थोच्चारणशिक्षकान्
हस्तेनाध्यापयेच्छिष्यान् शैक्षेण विधिना द्विजः  २२

इति षष्ठी कण्डिका

कण्डिका ७

क्रुष्टस्यमूर्द्ध नि स्थानं ललाटे प्रथमस्य तु
भ्रुवोर्मध्ये द्वितीयस्य तृतीयस्य च कर्णयोः  १

कण्ठस्थानं चतुर्थस्य मन्द्रस्योरसि तूच्यते
अतिस्वारस्य नीचस्य हृदिस्थानं विधीयते  २

अङ्गुष्ठस्योत्तमे क्रुष्टो ह्यङ्गुष्ठे प्रथमः स्वरः
प्रादेशिन्यां तु गान्धार ऋषभस्तदनन्तरम्  ३

अनामिकायां षड्जस्तु कनिष्ठिकायां च धैवतः
तस्याधस्ताच्च योन्यास्तु निषादं तत्र विन्यसेत्  ४

अपर्वत्वादसञ्ज्ञत्वादव्ययत्वाच्च नित्यशः
मन्द्रो हि नहि भूतस्तु परिस्वार इति स्मृतः  ५

क्रुष्टेन देवा जीवन्ति प्रथमेन तु मानुषाः
पशवस्तु द्वितीयेन गन्धर्वाप्सरसस्त्वनु ६

आण्डजाः पितरश्चैव चतुर्थस्वरजीविनः
मन्द्रश्चैवोपजीवन्ति पिशाचासुरराक्षसाः ७

अतिस्वारेण नीचेन अगत्स्थावरजङ्गमम्
सर्वाणि खलु भूतानि धार्यन्ते सामिकैः स्वरैः ८

दीप्तायता करुणानां मृदुमध्यमयोस्तथा
श्रुतीनां यो विशेषज्ञो न स आचार्य उच्यते ९

दीप्तामन्द्रे द्वितीये च प्रचतुर्थे तथैव तु
अति स्वारे तृतीये च क्रुष्टे तु करुणा श्रुतिः १०

श्रुतयोऽन्या द्वितीयस्य मृदुमध्यायताः स्मृताः
तासामपि तु वक्ष्यामि लक्षणानि पृथक् पृथक् ११

आयतात्वं भवेन्नोच्चैर्मृदुत्वं तु विपर्यये
स्वे स्वरे मध्यमत्वं तु तत्समीक्ष्य प्रयोजयेत् १२

द्वितीये विरताया तु कुष्टश्च परतो भवेत्
दीप्तां तां तु विजानीयात्प्रथमेन मृदुस्मृता १३

अत्रैव विरताया तु चतुर्थेन प्रवर्त्तते
तथा मन्द्रे भवेद्दीप्ता साम्नश्चैव समापने १४

नाभिरते श्रुतिं कुर्यात्स्वरयोर्नापि चान्तरे
न च ह्रस्वे च दीर्घे च न चापि घुटसञ्ज्ञिके १५

द्विविधागतिः पदान्तः स्थितसन्धिः सहोष्मभिः

पञ्चस्वेतेषु स्थानेषु विज्ञेयं घुटसञ्ज्ञतम्   १६

स्वरान्तराविरतानि ह्रस्वदीर्घघुटानि च
श्रुतिस्थानेष्वशेषाणि श्रुतिवत् स्वरतो भवेत्  १७

दीप्तामुदात्ते जानीयाद्दीप्तां च स्वरिते विदुः
अनुदात्ते मृदुर्ज्ञेया गन्धर्वा श्रुतिसम्पदः  १८

उदात्तश्चानुदात्तश्च स्वरितप्रचिते तथा
निघातश्चेति विज्ञेयः स्वरभेदस्तु पञ्चधा  १९

इति सप्तमी कण्डिका

कण्डिका ८

अत ऊर्द्ध्वं प्रवक्ष्याम्यार्चिकस्य स्वरत्रयम्
उदात्तश्चानुदात्तश्च तृतीयः स्वरितः स्वरः  १

य एवोदात्त इत्युक्तः स एव स्वरितात्परः
प्रचयः प्रोच्यते तज्ज्ञैर्न चात्रान्यत्स्वरान्तरम्  २

वर्णस्वारोऽतीतः स्वारः स्वरितो द्विविधः स्मृतः
मात्रिकोवर्ण एवं नु दीर्घस्तूच्चरितादनु  ३

स तु सप्तविधो ज्ञेयःस्वरः प्रत्ययदर्शनात्
पदेन तु स विज्ञेयो भवेद्यो यत्र यादृशः  ४

सप्तस्वरान्प्रयुञ्जीत दक्षिणं श्रवणं प्रति
आचार्यैर्विहितं शास्त्रं पुत्रशिष्यहितैषिभिः  ५

उच्चादुच्चतरं नास्ति नीचान्नीचतरं तथा
वैस्वर्ये स्वारसंज्ञायां किं स्थानं स्वारउच्यते  ६

उच्चनीचस्य यन्मध्ये साधारणमिति श्रुतिः
तं स्वारं स्वारसञ्ज्ञायां प्रतिजानन्ति शैक्षिकाः ७

उदात्ते निषादगान्धारावनुदात्तः ऋषभधैवतौ
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ८

यत्र कखपरा ऊष्मा जिह्वामूलप्रयोजनाः
तामथाज्ञापयेन्मात्रां प्रकृत्यैव तु सा कला ९

जात्यः क्षैप्रोऽभिनिहितस्तैरव्यञ्जन एव च
तिरोविरामः प्रश्लिष्टः पादवृत्तश्च सप्तमः १०

स्वाराणामहमेतेषां पृथग्वक्ष्यामि लक्षणम्
उद्दिष्टानां यथान्यायमुदाहरणमेव च ११

इति प्रथमस्याष्टमी कण्डिका

प्रथमः प्रपाठकः समाप्तः

द्वितीयः प्रपाठकः

कण्डिका १

सयकारं सर्वं वाप्यक्षरं स्वरितं भवेत्
न चोदात्तं पुरस्तस्य जात्यः स्वारः स उच्यते १

इ उ वर्णौ यदोदात्तावापद्येते यवौ क्वचित्
अनुदात्ते प्रत्यये नित्यं विद्यात्क्षैप्रस्य लक्षणम् २

ए ओ आभ्यामुदात्ताभ्यामकारो निहितश्चयः
अकारं यत्र लुम्पति तमभिनिहितं विदुः ३

उदात्तपूर्वं यत्किञ्चिच्छन्दसि स्वरितं भवेत्
एव सर्वत्रह्रस्वारस्तैरव्यञ्जन उच्यते ४

अवग्रहात्परं यत्र स्वरितं स्यादनन्तरम्
तिरोविरामं तं विद्यादुदात्तो यद्यवग्रहः ५

इकारं यत्र पश्येयुरिकारेणैव संयुतम्
उदात्तमनुदात्तेन प्रश्लिष्टं तं निबोधत ६

स्वरे चेत् स्वरितं यत्र विवृत्ता यत्र संहिता
एतत्पादान्तवृत्तस्य लक्षणं शास्त्रचोदितम् ७

जात्यः स्वारः स जात्येन श्रुष्टयग्रे क्षैप्र उच्यते
ते मन्वताभिनिहितस्तैरव्यञ्जन ऊतये ८

तिरोविरामो विष्कभिते प्राश्लिष्टो हीन्द्रगिर्वणः
पादवृत्तः क ईं वेद स्वाराःसप्तैवमादयः ९

उच्चादेकाक्षरात्पूर्वात्स्वर्यते यदिहाक्षरम्
स्वाराणां जात्यवर्ज्ञानामेषा प्रकृतिरुच्यते १०

चत्वारस्त्वादितः स्वाराः कम्पं पुष्यन्ति शास्त्रतः
उदात्ते वैकनीचे वाजुह्वग्रिस्तत्र दर्शनम् ११

इति प्रथमा कण्डिका

कण्डिका २

इकारान्ते पदे पूर्व उकारे परतः स्थिते
ह्रस्वकम्पं विजानीयान्मेधावी नात्र संशयः १

इकारान्ते पदे चैवोकारद्वयपदे परे
दीर्घं कम्पं विजानीयाच्छ्रग्ध्यूष्विति निदर्शनम् २

त्रयोदीर्घास्तु विज्ञेया ये च सन्ध्यक्षरेषु वै
मन्यापत्र्या न इन्द्राभ्यां शेषा ह्रस्वाः प्रकीर्तिताः ३

अनेकानामुदात्तानामनुदात्तः प्रत्ययो यदि
शिवकम्पं विजानीयादुदात्तः प्रत्ययो यदि ४

यत्रद्विप्रभृतीनिस्युरुदात्तान्यक्षराणि तु
नीचं चोच्चं च परतस्तत्रोदात्तं विदुर्बुधाः ५

न रेफे वा हकारे वा द्विर्भावो जायते क्वचित्
न च वर्गद्वितीयेषु न चतुर्थे कदा चन ६

न चतुर्थं तृतीयेन द्वितीयं प्रथमेन तु
आद्यमन्त्यं च मध्यञ्च स्वाक्षरेणैव पीडयेत् ७

अनन्त्यश्च भवेत् पूर्वोऽन्त्यश्च परतो यदि
तत्र मध्ये यमस्तिष्ठेत् स वर्णः पूर्ववर्णयोः ८

वर्गान्त्याञ्छषसैः सार्द्धमन्तस्थैर्नापि सँय्युतान्
दृष्ट्वा यमा निवर्त्तन्त आदेशिकमिवाध्वगाः ९

तृतीयश्च चतुर्थश्च चतुर्थादिपरं पदम्
द्वौ तृतीयौ हकारश्च हकारादि परं पदम् १०

अनुस्वारोपधामूलानां न क्वचित् क्रमतेपरम्
रहपूर्वसंयुते चाप्युत्तरं क्रमतेऽक्षरम् ११

संयोगे स्वरितं यत्र चोद्धातैः पतने यथा
पूर्वाङ्गमादितः कृत्वा पराङ्गादौ निवेशयेत् १२

संयोगे यत्रदृश्येत् व्यञ्जनं विरते पदे
पूर्वाङ्गं तद्विजानीयाद्येनारम्भस्तत्पराङ्गम् १३

संयोगात्तु परं स्वर्यं परं संयोगनायकम्

संयुक्तस्य तु वर्णस्य स्वरितं पूर्वमक्षरम् १४

अनुस्वारः पदान्तश्च क्रमजः प्रत्यये स्वके
स्वरभक्तिस्तथा रेफः सर्वं पूर्वाङ्गमुच्यते १५

पादादौ च पदादौ च संयोगावग्रहेषु च
यः शब्दइति विज्ञेयो योऽन्यः स य इतिस्मृतः १६

पदादावप्यविच्छेदे संयोगान्ते च तिष्ठताम्
वर्ज्जयित्वा रहर्याणामयादेशः प्रदृश्यते १७

स्वसंयुक्तो गुरुर्ज्ञेयः सानुस्वाराग्रिमः स्फुटः
अणुशेषोऽध्रिगोर्वापि युगलादिरविस्फुटः १८

इति द्वितीया कण्डिका

कण्डिका ३

यदुदात्तमुदात्तं तद्यत्स्वरितं तत्पदे भवति नीचम्
यन्नीचन्नीचमेव तद्यत्प्रचयं तदपि नीचम् १

अयमग्निः सुतो मित्रमिदं वयमयावनाः
प्रियं दूतं घृतं चित्रमभिशब्दश्च नीचतः २

अर्केष्वेव सुतेष्वेव यज्ञेषु कलशेषु च
शतेषु सपवित्रेषु नीचादुच्चार्यते श्रुतिः ३

हरिवरुणवरुण्येषु धारा पुरुषेषु च स्वरति रेफः
विश्वानरो नकारेषु शेषास्स्वरितानराः ४

द्वौ वरुणौ वस्वरित उदुत्तमं त्वं वरुण
धाकारे चोरुधारायामुरुधारेव दोहने ५

मात्रिकं वा द्विमात्रं वा स्वर्यते यदिहाक्षरम्
तस्यादितोऽर्द्धमात्रा वैशेषं तु परतो भवेत् ६

अदीर्घं दीर्घवत्कुर्याद् द्विस्वरं यत्प्रयुज्यते
कम्पोत्स्वरिताभिगीतं ह्रस्वकर्षणमेव च ७

निमेषकाला मात्रास्याद्विद्युत्कालेति चापरे
ऋक्स्वरा तुल्ययोगा वामतिः स्यात्सोमशर्मणः ८

समासेऽवग्रहं कुर्यात्पदं चात्रानुसंहितम्
यतोऽक्षरादिति करणं पदान्तं तस्य तं विदुः ९

सर्वत्र मित्रपुत्रसखिशब्दा अद्रिशतक्रतोरवग्रह्याः
आदित्यविप्रजातवेदाश्च सत्पतिगोपतिवृत्रहा समुद्राश्च १०

स्वर्युवो देवयवश्चारति देवतातये
चिकितिश्चुक्रुधं चैवनावगृह्णन्ति पण्डिताः ११

इति तृतीया कण्डिका

कण्डिका ४

विवृत्तयश्चतस्रो वै विज्ञेया इति मे मतम्
अक्षराणां नियोगेन तासां नामानि मे श्रृणु १

हस्वादिर्वत्सानुसृता वत्सानुसारिणी चाग्रे
पाकवत्युभयोर्ह्रस्वा दीर्घा वृद्धा पिपीलिका २

चतसृणां विवृत्तीनामन्तरं मात्रिकं भवेत्
अर्द्धमात्रिकमन्येषामन्येषामणुमात्रिकम् ३

आपद्यते मकारो रेफोष्मसु प्रत्ययेष्वनुस्वारम्
यलवेषुपरसवर्णं स्पर्शेषु चोत्तमापत्तिम् ४

नकारान्ते पदे पूर्वे स्वरे च परतः स्थिते
आकारं रक्तमित्याहुर्नकारेण तु रज्यते ५

नकारान्ते पदे पूर्वे व्यञ्जनैश्च यवो हिषु
अर्द्धमात्रा तु पूर्वस्य रज्यते त्वणुमात्रया ६

नकारः स्वरसंयुक्तश्चतुर्युक्तो विधीयते
रेफोरङ्गश्च लोपश्चानुस्वारोऽपि वा क्वचित् ७

हृदयादुत्तिष्ठते रङ्गः कांस्येन समनिःस्वरः
मृदुश्चैव द्विमात्रश्च दधन्वाँ इति दर्शनम् ८

यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते
एवं रङ्गः प्रयोक्तव्यो नारदस्य मतं यथा ९

इति चतुर्थी कण्डिका

कण्डिका ५

स्वरा गडदबाश्चैव ङणनमाः सहोष्मभिः
चतुर्णां पदजातीनां पदान्ता दशकीर्तिताः १

स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च
व्यञ्जनान्वनुवर्त्तन्ते यत्र तिष्ठति स स्वरः २

स्वरप्रधानं त्रैस्वर्यमाचार्याः प्रतिजानते
मणिवद्व्यञ्जनं विद्यात्सूत्रवच्च स्वरं विदुः ३

दुर्बलस्य यथा राष्ट्रं हरते बलवान्नृपः
दुर्बलं व्यञ्जनं तद्वद्धरते बलवान् स्वरः ४

ओभावश्च विवृत्तिश्च शषसा रेफएव च
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ५

स्वरप्रत्यया विवृत्तिः संहितायां तथा भवेत्
विसर्गस्तत्र मन्तव्यस्तालव्यो वात्र जायते ६

सन्ध्यक्षरोपधे सन्धौ प्राप्तलुप्तौ यवौ यदि
व्यञ्जनाख्या विवृत्तिस्तु स्वराख्या प्रतिसंहिता ७

ऊष्मान्तं विरतं यत्र सन्धावो भवते च यत्
विवृत्तिर्या भवेत्तत्र स्वाराख्यां तां विनिर्दिशेत् ८

यद्योभावप्रसन्धानमुकारादि परं पदम्
स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ९

प्रथमा उत्तमाश्चैव पदान्तेषु यदि स्थिताः
द्वितीयं स्थानमापन्नाः शषसप्रत्यया यदि १०

प्रथमानूष्मसंयुक्तान् द्वितीयानिव दर्शयेत्
न चैनान्प्रतिजानीयाद्यथा मत्स्यः क्षुरोऽप्सरा इति ११

इति पञ्चमी कण्डिका

## कण्डिका ६

छन्दोमानं न वृत्तं च पादस्थानं त्रिकारणम्
ऋचः स्वछन्दवृत्तास्तु पादास्त्वक्षरमानसः १

ऋवर्णं स्वरभक्तिं च छन्दोमानेन निर्दिशेत्
प्रत्ययेन समाहारेफं मिमीत स्वरभक्तिषु २

ऋवर्णे तु पृथग्रेफः प्रत्ययस्तु पृथग्भवेत्
विद्याल्लघुमृकारं तु यदि तूष्माणसंयुक्तः ३

ऊष्मणैव हि संयुक्तऋकारो यत्र पीड्यते
गुरुवर्णः सविज्ञेयस्तृचं चात्रानुदर्शनम् ४

ऋषभं च गृहीतं च बृहस्पतिं पृथिव्यां च
निर्ऋतिः पञ्चमा ह्यत्र ऋकारो नात्र संशयः ५

शषसहरादौ रेफः स्वरभक्तिर्जायते द्विपदा सन्धौ
इउवर्णाभ्यां हीना क्वचिदेकपदा क्रमवियुक्ता ६

स्वरभक्तिस्तु द्विविधा ऋकारो रेफ एव च
स्वरोदाव्यञ्जनोदा च विहिताक्षरचिन्तकैः ७

शषसेषु स्वरोदायां हकारे व्यञ्जनोदयाम्
शषसेषु विवृत्तां तु हकारे संवृतां विदुः ८

स्वरभक्तिं प्रयुञ्जानस्त्रीन्दोषान् परिवर्ज्जयेत्
इकारं चाप्युकारं च ग्रस्तदोषं तथैव च ९

संयोगपरं छपरं विसर्ज्जनीयं द्विमात्रिकं चैव
आसानिकं च न लघुसानुस्वारं घुटंतञ्च १०

इति षष्ठी कण्डिका

कण्डिका ७

पथ्यापादः प्रथमो द्वादशमात्रस्तथा तृतीयोऽपि
अष्टादशो द्वितीयः समापनः पञ्चदशमात्रः १

पथ्यालक्षणमुक्तं या त्वन्या सा स्मृता विपुला २

अक्षराणां लघुह्रस्वमसंयोगपरं यदि
तत् संयोगोत्तरं विद्याद् गुरुर्दीर्घाक्षराणि तु ३

विवृत्तिर्यत्र दृश्येत स्वारस्यैवाग्रतः स्थिता
गुरुः स्वारः स विज्ञेयः क्षैप्रस्तत्र न विद्यते ४

अष्टप्रकारं विज्ञेयं पदानां स्वरलक्षणम्
अन्तोदात्तमाद्युदात्तमुदात्तमनुदातं नीचस्वरितम् ५

मध्योदात्तं स्वरितं द्विरुदात्तमित्येता अष्टौ पदसंज्ञाः
अग्निः सोमः प्र वो वीर्यं हविषा स्वर्वनस्पतिः ६

अन्तमध्यमयोर्नाम्न्युदमनुदनिपाते
आद्यात् स्वरितमुपसर्गे द्विर्नीचमाख्यात इति ७

स्वरितात्पराणि यानि स्युर्धार्याण्यक्षराणि तु
सर्वाणि प्रचयस्थान्युपोदात्तं निहन्यते ८

प्रचयो यत्र दृश्येत तत्र हन्यात् स्वरं बुधः
स्वरितः केवलो यत्र मृदुन्तत्र निपातयेत् ९

पञ्चविधमाचार्यकन्नाम मुखं न्यासःकरणं प्रतिज्ञोच्चारणा
अत्रोच्यते श्रेयः खलु वै स प्रतिज्ञानोच्चारणा १०

यस्य कस्यचिद्वर्णस्य करणं नोपलभ्यते
प्रतिज्ञा तत्र वोढव्या करणं हि तदात्मकम् ११

तुम्बुरुनारदवसिष्ठविश्वावस्वादयश्च गन्धर्वाः
सामसुनिभृतं करणं स्वरसौक्ष्म्यात्तेऽपि हि न कुर्युः १२

इति सप्तमी कण्डिका

कण्डिका ८

कौक्षेयाग्निं सदारक्षेदश्नीयादशनं हितम्
जीर्णाहारःप्रबुद्धः सन्नुषसि ब्रह्म चिन्तयेत् १

शरद्विषुवतोऽतीतादुषस्युत्त्थानमिष्यते
यावद्वासन्तिकी रात्रिर्मध्यमा पर्युपस्थिता २

आम्रपालाशबिल्वानामपामार्गशिरीषयोः
वाग्यतः प्रातरुत्थाय भक्षयेद् दन्तधावनम्  ३

खदिरश्च कदम्बश्च करवीरकरंजयोः
सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः  ४

तेनास्य करणं सौक्ष्म्यं माधुर्यं चोपजायते
वर्णांश्च कुरुते सम्यक्प्राचीनौदव्रजिर्यथा  ५

त्रिफला लवणाख्येन भक्षयेच्छिक्षकः सदा
अग्निमेधाजनन्येषा स्वरवर्णकरी तथा  ६

कृत्वा चावश्यकान् धर्मान् जठरं पर्युपास्य च
पीत्वा धूमं घृतं चैव शुचिर्भूत्वा ततो वदेत्  ७

मन्द्रेणोपक्रमेत् पूर्वं सर्वशाखास्वयं विधिः
सप्तमन्त्राननतिक्रम्य यथेष्टां वाचमुत्सृजेत्  ८
न तां समीरयेद् वाचं या प्राणमुपरोधयेत्  ८अ

प्राणानामुपरोधेन वैस्वर्यं चोपजायते
स्वरव्यञ्जनमाधुर्यं लुप्यते नात्र संशयः ९

कुतीर्थादागतं दग्धमपवर्णैश्च भक्षितम्
न तस्य परिमोक्षोऽस्ति पापाहेरिव किल्बिषात्  १०

सुतीर्थादागतं व्यक्तं स्वाम्नातं सुप्रतिष्ठितम्
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते  ११

न करालो न लम्बोष्ठो न च सर्वानुनासिकः
गद्गदो बद्धजिह्वश्च प्रयोगान्वक्तुमर्हति  १२

एकचित्तो निरुद्भ्रान्तस्तान्तगानविवर्जितः
स तु वर्णान्प्रयुञ्जीत दन्तोष्ठं यस्य शोभनम्  १३

पञ्च विद्यां न गृह्णन्ति चण्डास्तब्धाश्च ये नराः
आलसाश्चानरोगाश्च येषां च विसृतं मनः  १४

शनैर्विद्यां शनैरर्थानारोहेत पर्वतं शनैः
शनैरध्वसु वर्त्तेत योजनानां परं व्रजेत्  १५

योजनानां सहस्राणि शनैर्याति पिपीलिका
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति  १६

नहि पार्ष्णिहता वाणी प्रयोगान्वक्तुमर्हति
बधिरस्येव तल्पस्था विदग्धा वामलोचना  १७

उपांशु त्वरितं चैवं योऽधीते वित्रसन्निव
अपि रूपसहस्रेषु सन्देहेष्वेव वर्त्तते  १८

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ
राजते न सभामध्ये जारगर्भा इव स्त्रियः  १९

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु सञ्चयम्
अबन्ध्यन्दिवसं कुर्याद्दानाध्ययनकर्मसु  २०

योजनानां शतं साग्रं शनैर्याति पिपीलिकाः
अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति  २१

यत्कीटैः पांसुभिः श्लक्ष्णैर्वल्मीकः क्रियते महान्
न तत्र बलसामर्थ्यमुद्योगस्तत्र कारणम्  २२

सहस्रगुणिता विद्या शतशः परिकीर्त्तिता

आगमिष्यति जिह्वाग्रे स्थलान्निम्नमिवोदकम्  २३

हयानामिव जात्यानामर्द्धरात्रार्द्धशायिनाम्
नहि विद्यार्थिनां निद्रा चिरन्नेत्रेषु तिष्ठति  २४

न भोजनविलम्बी स्यान्न च नारीनिबन्धनः
सुदूरमपि विद्यार्थी व्रजेद् गरुडहंसवत्  २५

अहेरिव गणाद्भीतः सौहृद्यं नरकादिव
राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति  २६

न शठाः प्राप्नुवन्त्यर्थान् न क्लीबा न च मानिनः
न च लोकरवाद्भीता न च श्वः श्वः प्रतीक्षकाः  २७

यथा खनन् खनित्रेण भूतले वारि विन्दति
एवं गुरुगतां विद्यां शुश्रूषुरधिगच्छति  २८

शुश्रूषारहिता विद्या यद्यपि मेधागुणैः समुपयाति
बन्ध्येव यौवनवती न तस्य विद्या फलवती भवति  २९

द्यूतं पुस्तकवाद्यं च नाटकेषु च सक्तिका
स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट्  ३०

यथा व्याघ्री हरेत्पुत्रान् दंष्ट्राभिर्न च पीडयेत्
भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत्  ३१

एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः
सम्यग् वर्णप्रयोगेण ब्रह्मलोके महीयते  ३२

इति द्वितीयस्याष्टमी कण्डिका

इति द्वितीयः प्रपाठकः

इति नारदीया शिक्षा समाप्ता